( प्रविश्य )

विद्द्वेगः—( विभीषण प्रति ) कुमार ! प्रथम तावद् दशकन्धरदुरवलेपदलनार्थं तदसिद्धो च विरोधिनिधनार्थं देव्या मन्दोदर्या प्रबोध्यमाने कुम्भकर्णे कर्णावस्कन्दी स एष कोलाहल ।

विभीषणः—अथ प्रबुद्ध कुम्भकर्ण ? । किमभिहित च तेन निरस्तनिद्रेण ? ।

विद्द्वेगः—कुमार ! प्रबुद्धवता कुम्भकर्णेन प्रबोधकेभ्य सीतापहारप्रभृति सैन्यसमागमनपर्यन्त रामरावणयोर्वृत्तान्तमवगम्य सविमर्शमित्यभिदधे राक्षसराज —

धर्मोऽसौ रक्षसा यत् परधरणिधनाऽगारदाराऽपहार ,
कार्योऽय शौर्यवृत्त्या, न पुनरुपधिना, सोऽथ चक्रे तथैव ? ।
चिन्त्य कालानुकूल्य तदपि न विदधे,

इत्यभिधाय पुन सानुशयारम्भमात्मान प्रत्येवमूचे—

को व्यतीते वितर्क-

स्तत् तूर्णं कुम्भकर्ण ! व्रज समरधरामुद्धर भ्रातृशल्यम् ॥५२॥

इत्युक्त्वा पराक्रमितुमुपक्रान्तवान् ।

रामः—( सविमर्शम् ) अहो ! नीतिशक्तिसम्पृक्ता कुम्भकर्णस्य भणिति ।

विभीषणः—देव ! भणितेरनुरूप सम्प्रहारस्यप्रकारोऽप्यस्य चिन्तनीय ।

रामः—किमुच्यते दशकन्धरानुजस्य कुम्भकर्णस्य ? । ( पुरतोऽवलोक्य पश्यन् ) सखे विभीषण ! द्वन्द्वयुद्धविधानेनिबद्धबुद्धय इमेते यातुधानसैनिका सलक्ष्यन्ते तदवरोधयतु मामेतान् ।

विभीषणः—( विलोक्य सप्रत्यभिज्ञम् ) देव !

प्रेतराजस्य सहाय्यापारप्रतिहस्तक ।
प्रहस्तोऽयमुदस्तोच्चैर्दण्डहस्तो विजृम्भते ॥ ५३ ॥

इतोऽपि—

महोदर पुर पश्य दशग्रीवमहोदरम् ।
गिरितुल्यगदादण्डमुद्दण्डकार्मुकम् ॥ ५४ ॥

रामः—याविमौ नीलेन सह कलहकेलिमनुभवितुमिच्छत ? ।

---

1 °मारचनपर्यन्त रामरावणयो भा० । 2 सविमर्शम्य भा० ।

**विभीषणः**—एवम् । तदनन्तरश्चायम्—

जगराजिनि वाजिनि स्थितस्तरुणाऽहस्करका[1]न्तिमिश्रित ।
दिशते द्दशमङ्गदे मुहुर्विहितातङ्कभरा नरान्तक ॥ ५५ ॥

**रामः**—सखे ! कोऽसौ नैकसैयसेनायामनायासविनिर्जितत्रिभुवनवीराहङ्कार इव पुरतं परिभाव्यते ? ।

**विभीषणः**—देव !

रथे स्थितोऽय मृगराजकेतने, निकेतन दु प्रसहस्य तेजस ।
सम सुमित्रातनयेन सङ्गर, समीहते रावणसूनुरिन्द्रजित् ॥ ५६ ॥

**रामः** –य किल मेघनादापरनामा मन्दोदरीनन्दन श्रूयते ? ।

**विभीषणः**—अथ किम् ? ।

**रामः**—कतर पुनरय सुरचक्रवर्तिजित समीपवर्ती विलोक्यते ? ।

**विभीषणः**—

लङ्केश्वरादजनि य, स्थितवन्ति यत्र
दिव्यायुधानि च विरञ्चि[2]परेण वीरे ।
रोमाञ्चकञ्चुकितकायतयाऽतिकाय,
सोऽय समित्यनुकरोति कदम्बपुष्पम् ॥ ५७ ॥

**रामः**—नन्वस्यापि वत्सलक्ष्मणाभिमुख एव कटाक्षनिक्षेप ।

**विहङ्गवेगः**—देव ! समुत्कृष्टतेजसेऽभ्यसूयन्ति खलु मनस्विना मानसानि ।

**विभीषणः**—साधूक्त विहङ्गवेगेन । यदेतेऽपि समकालमहम्प्रथमिकया हनूमन्तमेव हन्तुकामा पुरतोऽवतिष्ठन्ते । ( इति दर्शयति । )

**रामः**—किमभिधाना पुनरमी यातुधाना ? ।

**विभीषणः**—देव ! प्रथमन्तावत्—

बालार्कबिम्बारुणचक्रकान्तिर्दन्तावलस्कन्धमधिष्ठितोऽयम् ।
उदायुध कस्य मन सकम्प, प्रकम्पन सयति नाऽऽतनोति ? ॥ ५८ ॥

अपरश्च—

---

1 °वान्ततस्कर भा० । 2 °विनरेण भा० ।

घोर दधान परिघाभिधानमस्त्रं महाशस्त्रभृता कृतान्तः ।
देवान्तकः सैष नरान्तकस्य, भ्राता प्रघातार्थमिहोज्जिहीते ॥ ५९ ॥

तदन्तिके च —

दशशिरस्तनयस्त्रिशिरा शरासनमयं नमयन्नवधार्यताम् ।
प्रधनमूर्द्धनि यः प्रदरान् किरन्, गजगतो जगतोऽपि भयङ्करः ॥ ६० ॥

**रामः**—( साक्षम् ) किमेभिः प्रभूतैरप्यञ्जना[1]तनूजस्य ?।

**विभीषणः**—देव !

खरात्मजोऽयं मकराक्षनामा, दिव्यास्त्रयोधी वरसिन्धुरस्थः ।
तत्पैतृकं वैरमनुस्मरन् यस्त्वय्येव दुष्टां निदधाति दृष्टिम् ॥ ६१ ॥

**रामः**—( स्मित्वा ) भवतु । बहवः खल्वमी तमीचराः । तत्सङ्क्षेपतः समाचक्ष्व ।

**विभीषणः**—( सर्वानङ्गुल्या [2]निर्दिशन् ) देव ! सोऽयमृषभेण महापार्श्वः, गजेन प्रतपनः, जाम्बुवता विरूपाक्षः, शतबलिना विद्युज्जिह्वः, [3]बलेन तपनः, गन्धमादनेन विद्युन्माली, गवाक्षेण घोराक्षः, गवयेन मायामयः, केसरिणा कील्कर्णः, द्विविदेन दीर्घदंष्ट्रः, मैन्देन [4]वज्रमुष्टिरिति परस्परमपरैरपरैऽप्यायोधनविधित्सया पुरतः सरभन्ते ।

**रामः**—( पुनरवलोक्य ) कश्चासौ गगनमण्डलमण्डपावष्टम्भस्तम्भानुकारी महाराक्षसो दृश्यते ? ।

**विभीषणः**—देव !

लङ्कापुरीपरिभवे सति मय्यपीति,
व्रीडाविवर्णमवलोक्य कुम्भकर्णम् ।
देयं यदिष्टमिति वासनया परेषा,
निद्रारतिर्दिशति यः किल दीर्घनिद्राम् ॥ ६२ ॥

**रामः**—( कुम्भकर्णं निर्णीय साश्चर्यम् )

आरोप्यते गिरिशिरस्यपरो गिरिश्चेत्,
तद्वद्वन्द्वमञ्जनजलेन विलिप्यते च ।
अत्युच्चमेचकमनुस्तनुते तदैव,
तत्तुल्यतामवरजो दशकन्धरस्य ॥ ६३ ॥

---

1 [1]तनयस्य भा० । 2 निदशयन् भा० । 3 नलेन भा० । 4 वक्रमु° भा० ।

**विभीषणः**—देव ! विलोक्यताम् । स एष त्रिभुवनविजयी लङ्केश्वरः ।

स्मृत्वाऽद्यापि यदीयबाहुपरिघप्रेङ्खोल्लनानामसौ,
कैलाशः पवनावधूतविटपि[1]व्रातच्छलाद् वेपते ।
शक्रातिक्रमकृच्च यस्य चरितं गायन्ति नाकाङ्गना,
साकाङ्क्षं समराय राक्षसपतिः सोऽयं पुरः प्रेक्ष्यताम् ॥ ६४ ॥

**रामः**—सखे ! त्रिभुवनाभिभावुकेन तेजसा दशभिः शिरोभिर्विंशत्या भुजैरज्ञापितोऽपि विज्ञायत एवायं निशाचरचक्रवर्त्ती । ( इति रावणं निपुणमन्विष्य पुनः सश्लाघम् ) सखे विभीषण ! शृणु समीचीनमस्मदीयं वचः—

उत्पत्तिर्विमले विरिञ्चिनि कुले दुर्वारवीररसमया-
ऽपस्मारप्रतिकारभेषजभुजोद्भूतप्रतापं वपुः ।
वक्तुं यस्य च साहसं यदि स दिग्वासाः शिरःपूजितो,
जानीते तदयं स्वयं समजनि स्तुत्यः पुलस्त्योद्भवः ॥ ६५ ॥

अपरं च—

देशे देशे ककुभि ककुभि क्ष्माधरे क्ष्माधरे च,
ग्रामे ग्रामे पुरि पुरि चिरं यस्य जागर्त्ति कीर्त्तिः ।
दृष्टः स्वामी स पिशितभुजां यद्यसौ हन्त ! मह्यं,
दृष्टेनैव तदिदं विहरेचक्षुरक्षुद्रमेव ॥ ६६ ॥

**विभीषणः**—देव ! न सर्वकालं सदृशान्येव शरीरभाजां भागधेयानि भवन्ति ।

**रामः**—( तुमुलमाकर्ण्यावलोक्य च ) कथमेभिर्वानरनक्तञ्चरैरन्योन्यमुपक्रान्तेव रणप्रकरणप्रस्तावना । तथाहि—

उद्गर्जन्तूर्ध्व[2]वरोपितरोमराजयः,
शस्त्रोद्यमानि त इमे समराय राक्षसाः ।
लङ्कापुरीपरिसरे प्रसरन्ति सत्वरं,
शाखामृगाश्च मृगराजसमानविक्रमाः ॥ ६७ ॥

---

1 विपिनव्रातच्छ° भा० । 2 °वरोपित° भा० ।

सखे निभीषण ! तदिदानीं प्रत्युत्थानीय एवायं समरातिथिर्निशीथिनीचरनाथ । (¹इत्यभिधाय सर्वे निष्क्रान्ता ।)

## ॥ इति षष्ठोऽङ्कः समाप्तः ॥

---

जीमूतवाहनेन च² शैलेनेर च समुन्नतिं दधत ।
स्यादश्वराजसूनोरहिमवता हिमवता समता ॥ ६८ ॥

---

1 इत्युपाय सर्वे भा० । 2 च शैलेन समं समु' भा० ।

# सप्तमोऽङ्कः ।

( ततः प्रविशति [1]चारपुरुषः । )

[1]**चारपुरुषः**—समादिष्टोऽस्मि मथुराधिनाथेन महाराजलवणेन रामरावणयो रणवृत्तान्तपरिज्ञानार्थं लङ्कागमनाय । यदसौ प्रियसुहृद् दशकन्धरमनुरुध्यमानो मान्धातृ वधविरोधितेषु रघुवंशसम्भवभूपालेषु विशेषतो वैरायते । तदिदानीमस्मत्प्रभु प्रहस्तधूम्राक्ष महोदरप्रभृतिप्रधानयातुधानवधादुत्कर्षेण रामपक्षमाकर्ण्य विवर्णवदन किञ्चित् कुम्भकर्ण पराक्रमश्रवणेन समाश्वास्यमानमानसो म्रियते ।

क्षिप्त्वा कक्षाभ्यन्तरे वानरेन्द्रं, लङ्कामध्ये कुम्भकर्णे प्रविष्टे ।
तेनोदन्तेनामृतेनेव सिक्तः, स्वामिस्वान्तं शान्तसन्तापमास्ते ॥ १ ॥

( इति परिक्रामन् पुनः सविमर्शम् ) सुष्ठुतरं च तेनैतदनुष्ठितं वीरवरिष्ठेन वज्र ज्वालावल्लभेन । यतः—

वालिविरचितं कक्षानिक्षेपं रावणस्य सम्स्मृत्य ।
तदवरजं तदवरजः क्रुधा न्यधत्त स ति ॥ २ ॥

( पुरो विलोक्य च ) सोऽयं लङ्कापुरीपरिसरः । तदिह वृद्धतरविक्रमनिधानवानरयातु धानप्रधानसमाकुलितसकललोके स्वामिना रावणेन कुम्भकर्णस्य प्रवृत्तिपरिज्ञानार्थं प्रथमप्रहितं गृध्रमुखं क्वाऽपि शब्दयामि । ( इति तथा करोति । )

( प्रविश्य )

**गृध्रमुखः**—( पुरः पश्यन् ) अये ! स एष प्रियसखः कार्पटिकः । वयस्य ! किमिति मामुद्दिश्य शब्दायसे ?

**कार्पटिकः**—कथं विस्मरसि ? इति ।

**गृध्रमुखः**—क्रमपरिज्ञातकार्यप्रयोजनार्थं स्वामिनमुपतिष्ठामि ? ।

**कार्पटिकः**—तदावेदय मुद्गरप्रहारमूर्च्छितं सुग्रीवमादाय लङ्कान्तः प्रविष्टस्य कुम्भकर्णस्य वृत्तान्तम् ।

---

[1] 2 चर' मा० ।

**वृकमुखः**—( सोद्वेगम् ) सखे ! किं पृष्टेन कथितेन वा दुर्दैवविफलीकृतपराक्रमोपक्रमाणामुदन्तेन ? । तथापि यथावृत्तान्तं कथयामि—ततः सङ्घटितचेतन्यः स प्लवङ्गमपुङ्गवः सकलपौरजनस्तवनामृतसपूर्यमाणकर्णस्य कुम्भकर्णस्य कर्णनाशिकाविनाशं विधाय सत्वरमुत्प्लवमानः पुनरेव रामनिकटं जगाम ।

**कार्पटिकः**—ततस्ततः ? ।

**वृकमुखः**—अथासावपि तथैव व्यावृत्य

व्यङ्गत्वं गमितः प्लवङ्गपतिना लङ्काधिराजानुजः,
क्षीनो राघवमार्गणव्रणगलद्रक्तासवेनाश्मनः ।
कीशांश्च क्षणदाचरांश्च गणशः कुर्वन्नुपान्तस्थितान्,
काकुत्स्थं प्रसितुं प्रसारितमुखः सख्ये सरोपोऽभ्यगात् ॥ ३ ॥

**कार्पटिकः**—( सश्लाघम् ) अहो ! दर्पकोपातिशयः कोऽपि कुम्भकर्णस्य । ततस्ततः ? ।

**वृकमुखः**—ततश्च ।

यावन्न राघवमसौ ग्रसते सशङ्कै-
स्तन्मूर्ध्नि मोक्तुममरैः प्रगुणीकृतो यः ।
पुष्पाञ्जलिस्तदनु सद्रतकुम्भकर्णे,
काकुत्स्थं एव मुदितैर्मुमुचे स तावत् ॥ ४ ॥

**कार्पटिकः**—( सखेदम् ) हा त्रिभुवनैकसुभट कुम्भकर्ण ! भवदवसानमाकर्ण्य सोऽस्मत्स्वामी महाराजरावणो रावणाभ्युदयविषये निराशीभविष्यति । निश्चितं महाराजरावणोऽधुना—

सीतां रामं कुम्भकर्णं च शङ्के,
लङ्केशानः संस्मरन्नेककालम् ।
चित्ते कामक्रोधशोकानलाना-
मन्यां त्रेतामादधे स्वात्महव्यम् ॥ ५ ॥

ततस्ततः ? ।

---

1 'स्थितान्। कीशेशान् क्षण' मा० । 2 एव मुमुचे मुदितैः स मा० । 3 'मी लवणमहाराजो राव' मा० । 4 'वणोऽपि सम्प्रति—सीतां मा० ।

**वृकमुखः**—ततश्च कुम्भकर्णवधामर्षित शक्रजिदभिचारहोमेन दिव्यमजेयं रथमुत्पादयितुकामो निकुम्भि'रां प्रति प्रतिष्ठमानोऽर्द्धपथ एव लक्ष्मणेन धनुर्ज्यारावराजाज्ञया प्रतिषिद्ध ।

**कार्पटिकः**—ततस्तत [1]।

**वृकमुखः**—ततश्च स मन्दोदरीनन्दन कोपकम्पिताधरोष्ठपल्लवो लक्ष्मणसमीपे विभीष'णमवलोक्य नियतमेवास्मदीय रहस्यमिदमावेदितमनेनेति तावुभावपि प्रति अभियोद्धुमारेभे—

त्व मे तात इवासि तत् कथमिदं शत्रो पुर प्रोक्तवा
नस्मन्मर्म [2] न धर्म एष महता किं प्रश्रयेणाथवा [3]।
आ ! तिष्ठेति विभीषणे च परुषा वाच विमुञ्चन्नसौ,
बाणालीमितरत्र च प्रणिहित सौमित्रिणा रावणि ॥ ६ ॥

**कार्पटिकः**—(सखेदम्) सखे ! तदेतदपि प्रत्यर्थिमथनैकमनोरथस्थानमात्मनो दुर्दैवेन भग्नमवगम्य किमनुष्ठितं दशकन्धरेण [2]।

**वृकमुखः**—तेन च प्रियपुत्रविपत्तिवार्तानिर्वर्तितमूर्च्छावसाने भूयस्तरामिति निवेदितम्—

वत्स ! त्वयाऽस्मि विजयी द्विभुजैकमूर्ध्ना,
मौलीन् वहन्नपि दश द्विगुणाश्च बाहून् ।
तत् किं प्रयातकुतुकावसर विहाय,
निद्रा भजाननुभवत्यपुन प्रबोधाम् [?] ॥ ७ ॥

**कार्पटिकः**—ततस्तत [?]।

**वृकमुखः**—तदनन्तरमुद्वेलशौर्यसागरात्ययावाहितशैवलिनीप्रवाहो बहुतराणि वानरनिकुरम्बकाणि सहरन्नुत्त्रासयन्नगणयश्च रणाङ्गणप्रणयिनं लक्ष्मणं शक्तिप्रहारविदारितवक्षःस्थलं क्षितिमण्डले निक्षिप्य राक्षसाधिपतिर्जितकाशी पुनरेव निजनगरीं प्राविक्षत् ।

**कार्पटिकः**—ततस्तत [1]।

**वृकमुखः**—ततश्च 'जितं जितम्' इति सानन्देषु क्रव्यादवृन्देषु 'हा ! धिक् कष्टम्' इति सशोकेषु वैमानिकलोकेषु 'भग्नं भग्नम्' इति सञ्जातदरेषु वानरनिकरेषु व्याहरत्सु—

---

1 °रां प्रविशमानोऽर्धमे मृत एव दे० । 2 °णमालो° भा० ।

तदेतदीयमार्गमवलोकयामि। (इति निष्क्रान्तः।)

**रामः**—(लक्ष्मणं निरीक्ष्य सनिःश्वासं सुग्रीवं प्रति) वयस्य किष्किन्धाधिपते!

अमुना सह बन्धुनाऽधुना, विरतोऽस्मि न हि सर्वथा व्यथा।
न मया नृपतिर्विभीषणः, कृत इत्येतदरुन्तुदं तु मे॥ १५॥

**विभीषणः**—(रामं प्रति)

विश्वालङ्कार! किं लङ्काराज्यसिंहासनेन मे?।
यदुन्नततरे प्राप्ता तव चित्तासने स्थितिः॥ १६॥

**सुग्रीवः**—(रामं प्रति)

हे प्रतीक्ष! प्रतीक्षस्व मारुतेरागतिं ततः।
जीवितं लक्ष्मणे सीता त्वयि लङ्का विभीषणे॥ १७॥

**रामः**—(दीर्घमुष्णं च निःश्वस्य) सखे शाखामृगेश्वर! दुर्लभा सम्प्रति विदेहराजात्मजा। (इत्यधोमुखस्तिष्ठति।)

**सुग्रीवः**—(सावष्टम्भम्) पृथग्जन इव धीरतामपाकरोषि—

किष्किन्धां व्रज निजबान्धवेन सार्द्धं,
चिन्तावान् किमसि? पुरं हि तत् तवैव।
हत्वाऽरिं यदि न ददामि देव! तुभ्यं,
वैदेहीं तदहमहर्पतेर्न पुत्रः॥ १८॥

(नेपथ्ये)

भो भोः प्लवङ्गमवराः! प्रमोदध्वं प्रमोदध्वम्, यदायातः कृतकार्योऽयमञ्जनाशुक्तिमौक्तिकं संसारसागरोत्तरणमहायोगी लङ्काकुलक्लेशप्रवेशद्वारं मारुतिः। तदिदानीम्—

सीतापतिर्विजयतां मर्कटभूमिपतिर्नन्दयतु।
सरमापतिश्च नन्दतु रमापतिर्जयतामनृणः॥ १९॥

(इति श्रुत्वा सर्वेऽपि हर्षं नाटयन्ति।)

**रामः**—(सानन्दम्) कथमयमनार्यजाम्बवानाञ्जनेयागमननिवेदनामृतेन पुनरस्मानुज्जीवयति!। (इति वाचयित्वा) सखे! किमेतावदेवात्र निमित्तम्? (इति पटमर्पयति।)

**वृकमुखः**—( पट्टं गृहीत्वा ) वयस्य ! अतः परमतिहृदयोद्वेगजनकमिति न लिखितम् ।

**कार्पटिकः**—( सविमर्शम् ) नूनमञ्जनातनयेनोज्जीवितः सुमित्रासुतः । तदनन्तरं च किमभूत् ? ।

**वृकमुखः**—

[ ,

] तत्पौरुषं व्याहरन् ।

यत् तस्याप्यरतिप्रदं न च मदस्पर्शेन यद् दूष्यते,
तेजस्तद् दधदिङ्गितैरनुमितं रामस्य रङ्गे स्थितम् ॥ २० ॥

**कार्पटिकः**—ततस्ततः ? ।

**वृकमुखः**—ततश्च कृतपर्यङ्कबन्धं पक्षद्वयोपविष्टेषु वानरराक्षससुभटेषु, समराव लोकनकुतूहलोत्तानितलोचनेषु वैमानिकजनेषु, 'किं भविष्यति ?' इत्याकुलस्विन्नभालेषु दिक्पालेषु, स्वस्त्ययनसूक्तजपनिपुणे देवमुनिगणे, मन्दीकृतस्पन्दनप्रसरे भगवति भास्करे, दुर्विनीतनिजप्रपौत्रवधप्रतिविधातरि देवे विधातरि, शिथिलितसमाधिमुद्रे स्वामिनि रुद्रे च, परस्परमेकसुरभिसम्भोगाभिलाषयोरिव वृषभयोरिव, एकानोकहच्छायाश्रयणगजयोर्मत्तमतङ्गजयोरिव, एकगुहासङ्ग्रहणबद्धाग्रहयोर्दृप्तसिंहयोरिव रामरावणयोरेकस्त्रीकारणा रणप्रवृत्तिरासीत् ।

**कार्पटिकः**—सखे ! धन्योऽसि येन तव तादृशं समरकौतूहलमवलोकितम् । ततस्ततः ? ।

**वृकमुखः**—ततश्च

हुङ्कारैः प्रतिपर्वतप्रतिरवस्फारैर्दशानां दिशां
माशङ्कातिशयं दिशन् दशमुखः कोपेन रज्यन्मुखः ।
रामं वामकरावलम्बितधनुर्मौर्वीगुणास्फालन
क्रीडद्दक्षिणपाणिपद्ममभिनन्निश्छद्मशूरः शरैः ॥ २१ ॥

**कार्पटिकः**—ततस्ततः ? ।

**वृकमुखः**—ततश्च—

पश्चात्पतत्सु निशिखाहतिभिः शिरस्सु,
दर्पोदयेन तु पदेषु पुरःसरत्सु ।

---

१ 'मुर्दण्डद्रुणाक' द० ।

निर्व्याजविक्रमनमस्यनमस्य तस्य,

रामश्चकार निधनं प्रधनाभिगमे ॥ २२ ॥

**कार्पटिकः**—( श्रुत्वा सखेदम् ) हा लोकत्रयैकवीर ! हा रणाङ्गणाभगणितसुनासीर ! हा विजयलक्ष्मीविलासावास ! हा दिग्दन्तिदन्तदलनोज्ज्वलीकृतचन्द्रहास ! हा निरहङ्कारीकृतसकलनिर्जरसमाज ! हा लङ्काधिराज ! तथापि मनुष्यकृतमवसानं श्रूयते ? । ( इति शोचति । )

**वृकमुखः**—सखे ! यथार्थमपि मरणधर्मिणि मर्त्यलोके किमयमेवमनवद्यविक्रमः शोच्यते ? यस्य तदानीमपि—

तद् दूरेऽस्तु यदस्य राक्षसपतेर्वीर्येदमत्यद्भुतं,

युद्धं वज्रधरः परजयमथो तत्याज लज्जां निजाम् ।

दृष्ट्वा यस्य च दुर्दमस्य दलनं सोऽपि त्रिलोकीभट-

श्रेणीमौलिमणिर्घुणाक्षरसमं मेने रघूणां पतिः ॥ २३ ॥

**कार्पटिकः**—भवतु । ततस्ततः ? ।

**वृकमुखः**—ततश्च तथाविपन्नस्य राक्षसपतेरग्निसंस्कारं प्रति मन्दायमानं विभीषणं दाशरथिरित्यवादीत्—सखे ! न खलु कुलाचारः परिहर्त्तव्यः । तदस्य ज्येष्ठभ्रातुर्दशकण्ठस्य समयसदृशमनुष्ठीयताम् । यतः—

*प्राणापहारान्तमुशन्ति वैरं, नियातितं तत्सुहृदा त्वयेव ।*

तत्साम्प्रतं ते स यथा तथा मे, कालोचितं तत् क्रियतां तदस्य ॥ २४ ॥

( अथ विहितराजर्णाद् वैदेहिकेन विभीषणेन हनूमता च रामाज्ञया प्रसाधितशरीरा सीता तत्समीपमानीता । )

**कार्पटिकः**—ततस्ततः ? ।

**वृकमुखः**—ततश्च—

दृष्ट्वा चिराद् उचितमस्तसमस्तखेदा,

*मत्वाऽन्यथा तमथ भीतिमती च सीता ।*

स्वेनैव राक्षसगृहस्थितिदोषशङ्का

शान्त्यर्थमर्थयति वह्निनिवेशदिव्यम् ॥ २५ ॥

---

1 °र ! हा रावण त° दे० । 2 °था वा म° भा० । 3° स्य दृष्ट्वा° द० । 4 दुमदस्य भा० । 5 °स्य यातुधानाधिप° भा० । 6 °ष्ठस्य भ्रा भा० । 7 °णस्याध्व° भा० ।

तदनन्तर रामभ्रूसंज्ञाप्रेरिते प्लवगवृन्देरानीयमानेषु दारुनिकरेषु भवदाह्वानमाकर्ण्य सोऽग्निमिहाऽऽयातवान् ।

( नेपथ्ये )

भो भोस्त्रिभुवननिवासिन पुरुषा ! सेयं लज्जावती जनकराजात्मजा लक्ष्मणमुखेने दमभिधत्ते--

मातर्मेदिनि ! देव दीधितिपते ! सर्वेऽप्यधीशा ! दिशाम्,
एषा विज्ञपयामि च शृणुत हे विज्ञा ! प्रतिज्ञामिमाम् ।
कौशल्यासुतमन्तरेण मम यद्यन्योऽपि कश्चित् पुमा
श्चित्ते कर्मणि वाचि नाऽस्ति तदयं वह्निर्दहत्वाशु माम् ॥ २६ ॥

**वृकमुखः**—( श्रुत्वा ) कदाचिदिय प्रविशति हुताशने सीता ।

**कार्पटिकः**—( नेपथ्याभिमुख दर्शयन् ) ननु प्रविष्टैव । तथाहि—

हाहाकारगर्भितमुखेषु वलीमुखेषु
वैमानिकेषु नयनोदकमुत्सृजत्सु ।
व्योमाङ्गणाक्रमणकातुरदत्तफाल,
ज्वालाकलापमवलोक्य पावकस्य ॥ २७ ॥

**वृकमुखः**—अतिहिंसारणमिदमाचरित रामभद्रेण । ( पुनराकाशे )

दिष्ट्या मुञ्चत पुष्पवृष्टिममराम्भोधरपथेऽमार्यिन ,
प्रीतिं पुष्यतु दिव्यदुन्दुभिरवस्तूर्णं च कर्णद्वये ।
पुष्पाणामपि ताडन न सहते मृद्वी यदीया तनु
र्वैदेही दहनेऽपि साऽद्य निहिता शुद्धा न दग्धा यत ॥ २८ ॥

अपर च—

श्लाघ्य स राघवयुवा प्रतभूव यस्य,
न न्यायनिष्ठुरतरे हृदि पुष्पचाप ।
धन्या च सा जनकभूजलजप्रवेश-
भीतिं निगाय निजशीलबलेन याऽस्मौ ॥ २९ ॥

---

1 'सहसा प्रे' भा० । 2 'नकमता ल' भा० । 3 भिन्धे मात' भा० । 4 दहन प्रावक निरगाच्छुद्धा भा० ।

**कार्पटिकः**—(श्रुत्वा) सखे ! [1]शुद्धेव तावदवनिसुतेयम् । तदिदानीं किमपरेण [2] ।
गच्छतु भवान् मथुरायाम् । अह पुनरग्निविशुद्धा वैदेहीमवलोकयामि । (इति परिक्रामति ।)

(वृन्मुखो निष्क्रान्त ।)

(तत प्रविशति कृतनीराजिका चरणाङ्गुष्ठनिविष्टदृष्टिं सीतामुत्सङ्गे वहन् वैश्वानरो विभीषणसुग्रीवसहितौ रामलक्ष्मणौ हनुमांश्च ।)

**वैश्वानरः**—(राम प्रति)

इयं मूर्त्यन्तरेण श्रीरिय तीर्थं हि [3]जङ्गमम् ।
भूयोऽपि वत्स ! वैदेही देहार्द्धे तदिमा कुरु ॥ ३० ॥

(इति सीतामर्पयति ।)

**रामः**—(सप्रमोदप्रश्रयमञ्जलिं बद्ध्वा मौलिकमले विनिवेशयन्) यदादिष्ट निष्टपैक गुरुणा तत् तथा समर्थितमेव ।

(सर्वेऽपि रामसमीपस्थिता सीतामवलोक्य हर्षं नाटयन्ति ।)

**कार्पटिकः**—(सीता निर्वर्ण्य) अहो ! काऽपि कमनीयता विदेहदुहितु । तथाहि—

मन्ये महानन्दपद तदेतद्वितन्वतिन्व शशिनिभमुख्या ।
यस्मिन्नवस्थाय तथाहि सुस्थैर्नेत्रे पुनर्नाऽऽवृते नराणाम् ॥ ३१ ॥

(पुन सेर्ष्यम्) तदहमयोध्यामपि गत्वा निजनायकाभिप्रायवेदी यथा तथा वा दाशरथीनामपकर्तुं प्रयतिष्ये । (इति निष्क्रान्त ।)

**हनूमान्**—(सीतामुद्दिश्य दैव प्रति सोपालम्भम्)

यस्या सच्चरित त्रयेऽपि जगता जागर्त्ति भव्याऽयम
प्यस्थानस्खलिताभिशङ्कितहृदय प्रत्येति [4]या सर्वदा ।
साक्षात् साक्षिणि सव्यसोरपनिशावृत्तान्तविज्ञे स्थिते,
साऽप्यस्मावितराङ्गनेव निदधे दुर्वेधसा शुद्धये ॥ ३२ ॥

**सुग्रीवः**—अयि पवननन्दन ! स्थाने भवान् दैवमुपालब्धवानसि ।

(आकाशे)

---

1 शुद्धा तावदवनिसुता । स' मा० । 2 'नरपि विशु' मा० । 3 'करिष्यामि मा० ।
4 जीवनपद् मा० । 5 यस्या सत्य द ।

वत्स दशकन्धरवधोन्मूलितत्रिलोकीहृदयशल्य ! कौशल्यासरसीसरोरुह ! यदिदं वत्सायाः विदेहदुहितुः सच्चरितं त्रिभुवनाभ्यन्तरवर्त्तिना धूमध्वजेनाभिहितं तत्[1] तथैव मन्यताम् ।

( सर्वे श्रुत्वा सविस्म[2]यमालोकयन्ति । )

रामः—कथमयं भगवान्[3] त्रिभुवनचक्रवर्ती सङ्क्रन्दनो मदनुग्रहाय तातदशरथेन सम द्वित्राभिश्चामरहस्ताभिरप्सरोभिर्वीज्यमानो विमानस्थित इत एवाभिवर्त्तते[4] ।

( ततः प्रविशति यथानिर्दिष्टो वासवो राजा दशरथश्च । )

रामः—( वासवं प्रति सप्रश्रयम् ) देवदेवाधिदेव[4] ! पौलोमीपते ! दशरथसूनुरयं रामभद्रोऽभिवादयति । ( इति वासवं प्रणम्य दशरथं प्रणमति । )

☞ [5]( सर्वे वासवं प्रणमन्ति । )

( सीता उभौ प्रणम्य लज्जावती रामान्तरिता तिष्ठति । )

दशरथः—( रामं प्रति ) ←

एषा वधूर्वत्स ! कलङ्कपङ्कं नवेन्दुलेखेव न जातु धत्ते ।
शक्रप्रसादाच्च भविष्यतीयमपत्यमुक्ताफलताम्रपर्णी ॥ ३३ ॥

रामः—( सहर्षम् ) महान् प्रसादः । ( इति शिरस्य[6]ञ्जलिमारोपयति । )

वासवः—( रामं प्रति ) वत्स दाशरथे ! श्रूयतामपरमपि एतस्याः क्षितिदुहितुर्विषमतरमवस्थान्तरम्—

भवद्भीता सीता[7] हुतभविशदग्नावथ परं,
पुमान् सम्पृष्टोऽसाविति चकितचित्ता भृशमभूत् ।
त्यज त्रासं वत्से ! गुरुरिव त[8]वायं च भगवा-
निति व्याहारात्[8] पुनरभव[9]दाश्वस्तहृदया ॥ ३४ ॥

अपरमप्याकर्णय व्याहरणकारणम् ।

रामः—( सप्रश्रयम् ) समादिशतु देवः ।

वासवः—ककुत्स्थकुलतिलक !

---

1 तथेति म° भा० । 2 °यमवलो° भा० । 3 °न् त्रिभुवनचक्र° भा० । 4 देवाधिदेव ! दे० । 5 हस्तचिह्नान्तर्गतोऽयं पाठः दे० नास्ति । 6 °धात्मर्पयति भा० । 7 °ता हुत° दे० । 8 °वाऽऽयाहि भ° भा० । 9 °दाश्वस्तहृद° दे० ।

वैदेहेन ममाधिराधिनपुनर्दर्हग्रहेणाऽऽग्रह ,
सरम्भेन निरस्त आत्मदुहितु स्नेहानुबन्ध विना ।
तामात्मीयकृना पिशाचपतिना जातोऽस्मि जीवन्मृत ,
श्रुत्वाऽग्नौ निहिता सतीमपि तत प्राणानमा हास्यति ॥ ३५ ॥

**वैश्वानरः**—( राम प्रति ) वत्स राम ! श्रुत यदादिष्ट त्रिविष्टपाधिपेन [2] । तद-विलम्बितमेव कोऽपि निपुणमतिस्त्वरितगतिश्च मिथिलाधिनाथप्रतिबोधनाय प्रेष्यताम् ।

**सीता**—( श्रुत्वा मन्दाक्षरम् ) हा ताद ! अज्ज वि अहं ज्जेव जीविदसंदेहदाइणी संवुत्त म्हि [१] । ( इति रुदन्ती हनुमन्मुखमवलोकयति । )

**हनूमान्**—( सीताभिप्रायमवगम्य ) देवि ! कृतमनिर्वृत्या । द्रुततरमहमेव गत्वा जनकमहाराजमानन्दयिष्यामि । ( इति निष्क्रान्त । )

**लक्ष्मणः**—( हनूमन्त गच्छन्तमवलोक्य सशिर प्रकम्पमात्मगते )

मन्ये रामाय निमाय सृष्ट ! कष्टगत त्वया ।
अनुशय्य कृतोऽद्य तत्प्रतिकाराय मारुति ॥ ३६ ॥

**वासवः**—वत्स रामभद्र ! तदेतदप्यस्तु—

ये वानरा सयति तावकीना , कीनाशवेश्मातिथयो बभूवु ।
जीवन्तु ते रोगजरानिमुक्ता , युक्ता श्रिया सन्तु च मत्प्रसादात् ॥ ३७ ॥

( इत्यभिधाय दशरथेन सह तिरोदधे । )

**रामः**—( विलोक्य ) कथमयमस्मासु मनोरथादप्यधिकतर प्रसादफलमारोपयन्नप्रत्यक्ष संवृत्तो भगवान् सहस्राक्ष ! ।

**वैश्वानरः**—( राम प्रति )

दशवदनविनाशाद् दिक्पतीना दशाना,
दशरथसुत ! चक्रे दुर्दशान्तस्त्वया तत् ।
दशशतकरचक्षु श्रीप्रदजाशिषस्ते,
दश तु भुजभुजङ्ग सङ्गरस्थानरातीन् ॥ ३८ ॥

( इत्युक्त्वा निष्क्रान्त । )

---

१ हा तात ! अद्यापि अहमेव जनितसन्देहदायिनी संवृत्ताऽस्मि ? ।

1 °नार्थं प्र भा० । 2 °रोधन भा० ।

**विभीषणः**—(नेपथ्याभिमुखमवलोक्य) कथमयमवन्ध्यनामा वृद्धामात्यः सत्वरमिहागच्छति[1] ।

(ततः प्रविशत्यवन्ध्यः ।)

**अवन्ध्यः**—(रामं प्रणम्य सविनयम्) देव ! विज्ञपयन्ति प्रकृतिपुरुषाः—प्रगुणीकृता खल्वसौ लङ्काधिराज्यसिंहासनाध्यासनसामग्री, तदनुजानातु देवः कुमारविभीषणमभिषेकग्रहणाय ।

**रामः**—(विभीषणं प्रति) सखे ! सफलीक्रियतामियं कुलपुरुषप्रार्थना ।

**विभीषणः**—(पाणी सम्पुटीकृत्य) स तावदतिवाहितो दशरथादिष्टो वनवासव्रतावधिः । तदिदानीमेव तत्रभवति देवे स्वीकृते साकेतसाम्राज्याभिषेके पश्चान्ममापि लङ्काधिपत्यप्रतिष्ठा समुचिता भवति ।

**रामः**—सखे राक्षसराज ! नेदमयुक्तम् । तथापि पश्यतु भवान्—

धत्तेऽधुनाऽपि भरतः पटलं जटानां
मश्रुच्छटाच्छुरितनेत्रपुटः सविन्य ।
नास्मद्गुरुश्च मुनिरत्र तदेष पात्रं,
राज्यश्रियः प्रथमतोऽपि कथं भवामि ? ॥ ३९ ॥

**विभीषणः**—देव ! तर्हि कपीश्वरसुग्रीवकुमारलक्ष्मणयोर्मया मम लङ्काग[2]मनानुग्रहप्रसादोऽस्तु । अपरेऽप्यङ्गदनामवनदादयो वनभवनमुख्याः मदीयसत्कारग्रहणार्थं समादिश्यताम् ।

**रामः**—भवत्वेवम् ।

**सुग्रीवः**—(रामं प्रति) देव ! लङ्केश्वरसत्कारग्रहणादनन्तरं सर्वेषामपि वानराच्छभल्लानां निजनिजदेशं प्रति प्रस्थापनादेशो भवतु ।

**रामः**—(क्षणं विचिन्त्य) सखे सुग्रीव सूर्यसम्भव ! ते खलु स्वस्थानगमनोत्सुकाः शाम्बामगा मद्वचनैव सम्भाष्याः —

युष्माभिर्यदुपकृतं न तस्य पश्यामि निष्क्रयं क्वापि ।
तदहो वानरवीराः ! बहुमन्तव्यो मम स्नेहः ॥ ४० ॥

**सुग्रीवः**—यदादिशति देवः । (इति रामानुमतलक्ष्मणसुग्रीवाभ्यां सह विभीषणो निष्क्रान्तः ।)

---

1 दसोऽस्वाकृतिमात्रा° भा० । 2 °गमानु° भा० ।

**रामः**—( सीता करे गृहीत्वा ) प्रिये ! मयैवं दुर्विकल्पवता भृशं क्लेशिता भवती।

**सीता**—ण खु अज्जउत्तेण, अत्तणो दिव्वेण। ( इति रोदिति। )

**रामः**—( सीतावाष्पमुन्मृज्य )

विप्रयोगेण शुष्काऽपि स्नेहेनोपचिताऽपि मे।
नोपर्बुधेन दग्धाऽसि भृशं मन्दकृपया प्रिये ! ॥ ४१ ॥

अपि च—

म्लानं प्रिये ! माल्यमपि त्वदीयं, न वह्नितापेन सुदुःसहेन।
पतिव्रतामप्यपजाननम्रा, मनोऽनुतापेन तु तप्यते मे ॥ ४२ ॥

**सीता**—( संस्कृतमाश्रित्य )

निष्कारणं विरागिणा किमिदं मयेति,
मा भूर्विषादभरनं मुवनैकवीर !।
दैवेन केनचिदहं दहने यदस्ता,
निस्तारिता तु भवतैव हृदि स्थितेन ॥ ४३ ॥

**रामः**—देवि ! मदृशमिदं क्षमामभ्यस्यस्य। [1]अपि च—

अप्येकं दधदानन्दं भवत्संयोगसम्भवम्।
अद्य वेद्मि स्वमुत्कृष्टं शतानन्दादपि प्रिये ! ॥ ४४ ॥

( नेपथ्ये )

देव दिवाकरकुलैकललाम राम ! तदिदं पुष्पकाभिधानं विमानमधिरुह्यतामयोध्यागमनाय।

**रामः**—( श्रुत्वा ) कथमसौ विभीषणो व्याहरति ?। देवि ! तदेनमभिनवभूपाल-मभ्युत्थानेन सम्भावयामि।

( इति निष्क्रान्ताः सर्वे )

## ॥ इति सप्तमोऽङ्कः समाप्तः ॥

धात्री प्रभूतधान्या यद्यपि वसुमानसौ च सविताऽस्मि।
पालयति वस्तुपालः प्रजा क्षुधा बाधितास्तदपि ॥ ४५ ॥

---

१ न खलु आर्यपुत्रेण, आत्मनो दैवेन।

---

1 °ण युक्ताऽपि दे०। 2 अपरं च भा०। 3 दे० आदर्श नास्त्ययं श्लोकः।

# अष्टमोऽङ्कः ।

( नेपथ्ये )

जयतु जयतु रामः क्षेमकृद् विष्टपाना-
मनिशमयमभीष्टां लक्ष्मणोऽप्येतु लक्ष्मीम् ।
भवतु च भुवि सीता स्फीतकीर्तिः शुभाना
भवनमपि कपीन्द्रः कोणपेन्द्रश्च भूयात् ॥ १ ॥

देव दाशरथे ! सोऽयं दिव्यचारणगणस्त्वदीयदर्शनेन कृतार्थीकृतः सम्प्रति निजनिजस्थानगमनाय भवन्तमापृच्छते । यतः —

लोचनेन तव चारुपक्ष्मणा, लक्ष्मणाग्रज ! निरीक्षितोऽद्य यः ।
सम्मदेन महता स्वमुत्तमं, मन्यते स्म शतमन्युतोऽपि सः ॥ २ ॥

( ततः प्रविशति विमानस्थितो रामः सीतालक्ष्मणविभीषणसुग्रीवाश्च । )

**विभीषणः**—( पुष्पकं प्रति )

हे विमान ! पवमानमपि त्वं, पटुतां गमयदात्मजवेन ।
भास्कराभिजनसम्भवभूपायत्तपत्तनसमीपमुपेहि ॥ ३ ॥

( इति सर्वे विमानोद्गतिं नाटयन्ति । )

**रामः**—देवि ! जनकराजात्मजे !

विमानं व्योमाग्रे व्रजति निजमाणिक्यनिकर-
प्रभापातप्रद्योतनकरसरजाभूनमिव ।
इहस्था पश्यामः सुमुखि ! नगलक्ष्यानुत्तुङ्गगणान्,
गिरीन् मुष्टिग्राह्यान्, सरनिर्गमियांश्च जलधीन् ॥ ४ ॥

( उत्थितस्गौरवं च ) अमुं विमानानामन्तरं भगवन्तमुड्डामितत्रिभुवनालोकमुपश्लोकयामि । ( अञ्जलिं बद्ध्वा )

१ दिव्यचारण० आ० । २ सावशिष्टानुत्तरिप दे० । ३ *नरांगम आ० ।

पुष्णातु प्रमदं प्रभुः स भवतामुष्णद्युतिर्यत्कृपा-
दृक्पातामृतसारणिप्रणयिनि क्ष्मालोकलीलावने ।
आविर्भूतनवाङ्कुलीक्षिशल्या सुच्छायता बिभ्रतः,
शोभन्ते मनुचन्द्रमाः द्रुतरं रोगाग्निरुग्णा अपि ॥ ५ ॥

**सीता**—( सूर्यं प्रणम्य रामं प्रति ) अज्जउत्त ! कहिं स वाणररक्खसाण पाणावसाणअरो संगरो संवुत्तो [1] ।

**रामः**—( अङ्गुल्या निदर्शयन् )
तामेतां विद्धि युद्धावनिमवनिसुते ! [1]यत्र नक्तञ्चराणां
सक्षीणे शोणितौघैरयमवनि महानष्टम स्पष्टमब्धिः ।
यन्मध्ये स्वल्पमध्ये ! कपिकुलदलितानन्तदन्तीन्द्रदम्भा
जम्भारातेर्भयेन स्थित इव निवहः सर्वतः पर्वतानाम् ॥ ६ ॥

**लक्ष्मणः**—( सीतां प्रति ) देवि दशरथस्नुषे ! परिभाव्यतामितः—
उज्जीवितगतवानररिक्तार्द्धोऽयं समित्महीमूर्द्धा ।
कचमेचकमृतराक्षसखचितार्द्धो भाति खल्वतिरिव ॥ ७ ॥
( सीता दृष्ट्वा स्मयते )

**सुग्रीवः**—( रामं प्रति ) स्मरति देवो यदत्र तेदारुणात्मभिराचरितम् [2] ।

**रामः**—सखे ! कृतममुना वृत्तान्तेन ।

**सीता**—[3]अज्जउत्त ! केण कारणेण एस वाणरेसरो जपतो णिवारीयदि [2] ।

**रामः**—( सवैलक्ष्यम् ) प्रिये ! श्रूयताम् । इह हि—
मायाकृतामपि मृगाक्षि ! मूर्तिं त्वदीयां,
सख्या विदन् न सहसैव मृतोऽस्मि यस्मात् ।
व्रीडावनम्रस्तदहमेष मृषानुरक्तः,
शक्तो न दर्शयितुमात्ममुखं पुरस्ते ॥ ८ ॥

---

१ आर्यपुत्र ! कुत्र स वानरराक्षसानां प्राणावसानकरः सङ्गरः संवृत्तः ? ।
२ आर्यपुत्र ! केन कारणेन एष वानरेश्वरः जल्पन् निवार्यते ? ।

---

1 यत्र राक्ष° भा० । 2 °नवानरैरिह रिक्तार्द्ध द० । 3 °करा स्माभी राचरिताः पा° । द० । 4 °सरो वज्जरेन णि° भा० ।

**सीता**—अज्जउत्त ! एसो वि जणो एत्थ समाणावराहो ज्जेव ।

**रामः**—( विमृश्य ) प्रिये ! कदाचिदस्मदीयमपि कृतविलम्बं शिरस्तत्राग्रे तैर्दुरात्मभिर्दर्शितं भविष्यति ।

**सीता**—(सगद्गदम्) अज्जउत्त ! किं तुम्हं तुम्हाण पुरओ पिचरिमि ? । (शिरस्यञ्जलिं बद्ध्वा ) णमो पियसहीए तिजडाए, जीए तया तेहिं तेहिं पच्चायणावयणेहिं समस्सासिय समस्सासिय पुणो वि अ अज्जउत्तमुहचंददसणचरी कद म्हि ।

**रामः**—( अन्यतो दर्शयन् )

अस्मिन्निन्दुमुखि ! स्थले छलविदा पुत्रेण लङ्कापते
रसङ्घनघनिरन्धनानि फणिनः फूत्कारिणः प्रेषिताः ।
ध्यातायातपतङ्गपुङ्गवभयाद्वेगुर्निगूढं च ते,
निन्दन्तो निजमौलिमण्डनमणिश्रेणीप्रकाशं निशि ॥ ९ ॥

( पुनरन्यतो दर्शयन् ) प्रिये ! शृणु वाचान्तरम् । इह हि—

दैवात् तत्र जगत्त्रयैकसुभटे दर्पोत्कटेन्द्रद्विप-
क्षोदोन्मादसमेतचेतसि गते मोक्षाय रक्षःपतौ ।
बाष्पैर्बन्धुविपत्तिशोकगलितैः शान्तप्रकोपानलः,
क्रन्दत्येष विभीषणः सकरुणः सार्धं व्यधान्मामपि ॥ १० ॥

**लक्ष्मणः**—( राम प्रति ) देव !

कारणविकृतोऽपि पुनः प्रकृतिं प्रतिपद्यते जनः स्निग्धः ।
सलिलं वह्नेस्तापात् तप्तं पुनरेति शीतत्वम् ॥ ११ ॥

**रामः**—( दूरतो दर्शयन् ) देवि ! वसुन्धरासम्भवे ! दृश्यतामिदमस्मदीयपूर्वपुरुषस्य सगरचक्रवर्तिनः पूर्तधर्मनिर्माणम् ।

अम्भोधिर्भगवानयं जयति यः कल्पान्ततल्पं हरे
र्यन्छेषापुसुमोपमं पशुपतिर्धत्ते विधुं मूर्द्धनि ।

१ आर्यपुत्र ! एषोऽपि जनः अत्र समानापराध एव ।

२ आर्यपुत्र ! किं युष्मान् युष्माकं पुरतः कथयामि ? (?)। नमः प्रियसख्यै त्रिजटायै, यया तदा तैस्तैः प्रलापवचनैः समाश्वास्य समाश्वास्य पुनरपि आर्यपुत्रमुखचन्द्रदर्शनचरी कृताऽस्मि।

1 °एसोऽतिक भा० । 2 यत मुधा पिन° भा० । 3 °स्तापादपास्तमन्यात भा० । 4 वसुधासम्भ° भा० ।

यद्वृत्तामृतहन्तकारस्त्रलोन्मत्त पति म्वर्गिणा,
यज्जातद्रुमतानने विहरति स्त्रैणेन यज्जन्मना ॥ १२ ॥

तत् प्रणम्यतामम्मो ।

( सीता तथा करोति । )

**विभीषणः**—( राम प्रति ) देव ! परिभाव्यताम्—

वृद्धस्य वारिधेरस्य पोतैश्च प्रतारितैः ।
जनो गृह्णाति धूर्तोऽयमप्यन्त स्थगित वसु । १३ ॥

**रामः**—( स्मृत्वा ) सखे कौणपाधिप ! क्वचिदमर्त्यभावेऽपि मर्त्यधर्मव्यवहारो दृश्यते । तथाहि—

गङ्गा समुद्रदयिता धृता हरेणाऽस्य सोऽप्यधत्त विषम् ।
इत्याततायिभाव परम्परेणोभयोरभवत् ॥ १४ ॥

( समन्तादवलोक्य सीता प्रति )

जम्बूद्वीपस्याभितो वर्तमानश्चक्राकार सागरोऽय चकास्ति ।
यत्सम्पृक्ता वाहिनीना प्रवाहा, शोभामन्त सुभ्रु ! निम्नगाणाम् ॥ १५ ॥

**सीता**—( पुरो विलोक्य ) अज्जउत्त ! किं णेद सागरसिरीए सीमतमरिच्छ पिक्खीयदि [१] ।

**रामः**—( दृष्ट्वा )

रक्षोराजस्यायमुत्पातकेतु,
कीर्तिस्थान शाश्वत कीर्तनेतु ।
त्वद्वक्त्रेन्दुप्रेक्षणानन्दहेतु,
सीते ! साक्षाद् दृश्यते सिन्धुसेतु ॥ १६ ॥

( सीता सेतु प्रणमति । )

**रामः**—देवि ! सम्पादनसमयमुद्भूतसम्भ्रमस्य तस्य तुषारशिखरिसूनोरवस्थाविशेष-मेव सम्भावयामि—

---

१ आर्यपुत्र ! किमिद सागरश्रिया सीम तसदृश प्रेक्ष्यते ।

---

१ दृश्यत भा० ।

**सीता**—( स्मृत्वा सगद्गदम् ) एसो तस्स महाभायस्स दहरहमरिरठस्स जाणय-
सरिन्तस्स वा ।

**लक्ष्मणः**—( राम प्रति ) परिभाव्यतामित —

किष्किन्ध इत्यभिधया धरणीधरोऽयं,
यस्मिन् स वासविरवास कपिप्रवीर ।
सा चण्डभानुतनुजस्य वगप्रकाण्ड-
शक्तिर्यदीयभुजदण्डबलानुकम्पा ॥ २२ ॥

**रामः**—( सशिर प्रकम्पम ) वत्स ! वचनागोचरस्तस्य वालिन सङ्क्रन्दननन्दनस्य
पौरुषप्रकर्ष । तथाहि—

निबिडनिर्पान्तनिगडितमुखनाशाश्वासदुःस्थित तस्था ।
स जगत्त्रयी नृचथा चक्षाकुन्रे हरेर्यस्य ॥ २३ ॥

**सुग्रीवः**—( राम प्रति सविनयम् ) देव ! सेय प्रयामता भवदीयप्रसादसम्पादिता
मदीयराजधानी । तदियमिदानीमानीयता प्रमोदातिशय प्राघूर्णकग्रहणव्यपदेशागतस्य देवस्य
दर्शनेन ।

**रामः**—( सीता दर्शयन् ) सखे ! किमस्मात्मियताऽपि प्राघूर्णकेन कृतेन न
सन्तुष्यति प्रियवयस्य ? ।

( सुग्रीवो लज्जा नाटयति । )

**रामः**—वयस्य ! किमपि प्रार्थनीयमस्ति ।

**सुग्रीवः**—देव ! नियोजनीये जने का नाम प्रार्थना ? । समादिश्यताम् । ←

**रामः**—वयस्य प्लवगपते ! मम मान्त्रिसापादनवाच्यताऽपनोदार्थं तत्सुनुरङ्गदोऽयं
युवराजपदेऽभिषेक्तव्य ।

**सुग्रीवः**—देव ! मया भवदभिप्रायमवगच्छता प्रथमतोऽपि समर्थित एवायमर्थ ।

**लक्ष्मणः**—( सीता प्रति ) देवि विदेहराजात्मजे ! सोऽय सुरसुन्दरीसम्भोगसम्मद-
सम्पादनकल्पो माल्यवान् नाम पर्वत प्रेक्ष्यते । यत्र पयोदागमसमयरमणीयतमे भवद्विरह-
विधुरेण देवेन दाशरथिना किं नाम नाऽऽचरितम ? । तथाहि—

१ नास्त्यस्य महाभागाय दशायमदशाय जनस्मदशाय वा ।

1 किमस्त सगद्द भा० । 2 स्तवना पत्रे १५ टिप्पणी २ । 3 निराज्य जन भा० ।

आर्येण मोचादलकोमलेन, विमुञ्चता नाप्पजल सशब्दम् ।
नवाम्बुवाहाऽनुकृति कृताऽन्या, तडित् तु न त्व स्फुरिताऽस्य पार्श्वे ॥२४॥

**सीता**—( सगद्गदम् ) वत्स ! तए वि ण णिवारिदो दुक्ख णित्थरन्तो अज्जउत्तो ?।

**रामः**—( स्मित्वा ) प्रिये ! का नाम तस्माद्स्माकं दुःखनिवारणा ? । यस्य प्रत्युत—
अगाधे त्वद्वियोगाब्धौ लक्ष्मणस्य निमज्जत ।
हस्तालम्ब पुनर्यच्छन् विसस्मार स्वमप्यहम् ॥ २५ ॥

**सीता**—( दृष्ट्वा ) अज्जउत्त ! को एस विमेसमणोहरो विय अवलोईअदि ।

**रामः**—देवि ! तदिद पवित्रतरपात्रमाश्रमपदम्, यत्र किल बलिच्छलनादनन्तर स भगवान् वामनमूर्त्ति निधरूपस्तप्यमान स्वयमागत्य दैत्यगुरुणा भृगुपङ्क्तेर्वैरमुपालब्ध —

स्वामिन्निन्दिरमुनापते ! गमयता पातालमूर्ध्न बलिं,
त्वम्याऽय भरता लघुत्वपदहृ स्पष्टीकृत केवलम् ।
यस्मादेष पुर स्थितिऽर्थिनि नगनाथे त्वयि क्षोणिका-
ऽमात्रो सर्वनिरज्जथा स्वयमधो गन्तु ततोऽधीच्छति ॥ २६ ॥

**लक्ष्मणः**—(सचमत्कारम् ) अहो ! महती काऽपि तस्य दानवपतेर्दानरसिकता । तथाहि—

कमलाकरकमले बलेरिलामण्डल तदा ददत ।
आनन्दाश्रु प्रथम पपात, दानोदक पश्चात् ॥ २७ ॥

**सीता**—( दूरादवलोक्य ) अज्जउत्त ! को एस कप्पासकप्पपण्डुरसिहरसहस्सो महागिरी पिक्खीयदि ? ।

**रामः**—प्रिये ! सोऽय सर्वपर्वतसार्वभौम पार्वतीपिता हिमवान्नाम । तथाहि—

तारलावण्यलक्ष्मीं कलयति मलयस्तावदापि करोति
क्रौञ्चश्वेतोहरत्व हरधरणिधरस्तावदभ्ये त्वमिश्राम् ।

१ वत्स ! त्वयाऽपि न निवारित दुःख निस्तारयन् आर्यपुत्र ? ।
२ आर्यपुत्र ! क एष विशेषमनोहर इव अवलोक्यते ? ।
३ आर्यपुत्र ! क एष कर्पाससमपाण्डुरशिखरसहस्र महागिरि प्रेक्ष्यते ? ।

1 दृष्ट्वा दे० । 2 पुनर्य भा० । 3 य पग भा० । 4 पवित्रतरपात्रमाश्र मा० । 5 ततोऽपीच्छ भा० । 6 'यतु दे० । 7 'नरोत दे० । 8 स्यत्वमि द ।

तावद् गर्वं [1]सुमर्वक्षितिभृदपि दधात्युद्धतं च विन्ध्य-
स्तावद् धत्ते धरापतिरतिरुचिरो दृश्यतेऽसौ न यावत् ॥ २८ ॥

**लक्ष्मणः**—आर्य ! स किल तादृशः स्मरशङ्करयोरत्र शैलेन्द्रशिखरे निजनिज-प्रभावाविर्भावः संवृत्तः श्रूयते ।

**रामः**—अथ किम् [2] ।

**सुग्रीवः**—( स्मृत्वा सचमत्कारम् ) अहह ! शृङ्गारशान्तरसैकनिधानयोरनयोः निर्वचनीयः कोऽपि शक्तिसौरभातिरेकः । तथाहि—

स श्रेयसे भवतु भालविलोचनान्त-
पातेन यो रतिपतिं कृतवाननङ्गम् ।
सोऽप्यस्तु येन गिरिजास्यममोघमस्त्रं,
मुक्त्वा कृतः स त्रिपुरर्द्धशरीरशेषः ॥ २९ ॥

**रामः**—( अपवार्य सीतां प्रति )

देवः शिवो जयति वक्षसि दोर्युगेन,
न्यञ्चत्कुचं गिरिजया परिरभ्यमानः ।
बध्नन्ननङ्गनिशिखत्रणवेदनाप-
नोदाय पट्टकमिवौषधपिण्डगर्भम् ॥ ३० ॥

( सीता सलज्जा किञ्चिद् स्मयते । )

**रामः**—( दूरादस्योन्य सहर्षं पुष्पकं प्रति ) हे देवयानप्रधान ! किञ्चिद् दक्षिणतः समुपसर्प, यथा प्रयागतीर्थावलोकनेन सफलीकरोमि निजनेत्रयुगम् इति ।

( सर्वे तथा विमानगतिं नाटयन्ति । )

**लक्ष्मणः**—( दृष्ट्वा सविमर्शम् ) कोऽसौ व्यावर्तितग्रीवमस्मान्मुहुर्मुहुरवलोकयन्नयोध्याभिमुखं परिक्रामति ? ।

**विभीषणः** ( वीक्ष्योपलक्ष्य च ) अथ तावद् दशमुखमतिक्रम्य मथुराधिपतेर्लवणस्य प्रसादपात्रं कार्पटिकः । ( पुनः सवितर्कम् ) यथाऽयमेता दिशमुपसर्पति तथा लवणेनापि नियतमितः क्वापि गमनेन भवितव्यम् ।

---

1 सु पूर्व भा० । 2 सुमन्त्र भा० ।

( ततः प्रविशति यथानिर्दिष्टः कार्पटिकः । )

**कार्पटिकः**—( ऊर्ध्वमवलोक्यन् ) कथमेते नु प्राप्ता एव विमानस्थिता काकुत्स्थप्रभृतयः [1]। तद् यावदमी प्रयागावलोकनकुतूहलेन विलम्बन्ते तावदहं सत्वरमयोध्यां गत्वा समीहितं साधयामि । ( इति द्रुततरं गच्छति । )

**रामः**—( सुग्रीवविभीषणौ प्रति ) वयस्यौ ! भगवन्तमिह भरद्वाजमुपस्थाय तदनुमता साकेतसीमानमवतरिष्यामः ।

( इति निष्क्रान्ताः )

**कार्पटिकः**—( निमृश्य ) सोऽहमिदानीं दानवव्यापद्व्यार्थमृषिकुमारवेषं करोमि । ( इति तथाकृत्वा पुरो विलोक्य च ) सेयमयोध्यापुरी । ( पुनः सविस्मयम् ) एषा राजन्यसैन्यैरुपरुद्धेव निरीक्ष्यते, तदेतत्कारणमितः समागच्छतः पुरुषादवगच्छामि । ( इति तमुपसर्पति । )

( प्रविश्य )

**पुरुषः**-( पुरो विलोक्य ) अये ! मुनिकुमारक इव भगवन् ! नमस्ते ।

[2]**कार्पटिकः**—स्वस्ति भवते । भद्र ! किंनिमित्तमियं नगरी गरीयसा सैन्यसन्दोहेन परितः परीता सम्प्रति वर्त्तते ? ।

**पुरुषः**—श्रूयताम्—

श्रुत्वा सीताहरणमरणोत्पत्तितं पक्षिराजा-
दार्तिं कर्तुं सपदि भरतः कोणपेन्द्रेण सार्द्धम् ।
राजामाज्ञाप्रवणमनसा प्रेषयामास दूता-
नभ्याहृताः पुरपरिसरावासिनः सन्ति तेऽमी ॥ ३१ ॥

[3]☞ **कार्पटिकः**—( स्वगतम् ) अहो ! सौहार्दं दाशरथीनाम् ।

**पुरुषः**—किंनिमित्तमिहागमनं उत्सुकतानिवेदितव्याकुलीभावस्य महाभागस्य [4]। ←

**कार्पटिकः**—भगवता कुम्भसम्भवेनाऽऽदेशेन भरतसन्दर्शनार्थम् [5]।

**पुरुषः**—नायमयोध्यायाम्, किन्तु नन्दिग्रामे । तन्मयैव सह तत्र कुमारसन्दर्शनार्थं गम्यतामिति ।

---

1 °कनविनोदेन भा० । 2 मुनिकुमारक द० । 3 द्रष्टव्या पत्र १० टिप्पणी २ ।
4 °वञ्चित द० । °वशेन भा० । 5 °सन्दर्शना° द० ।

( उभौ परिक्रामतः । )

**कार्पटिकः**—( सविमर्शमात्मगतम् ) निश्चितमसौ राजकुलव्यापृत, तदिम वार्त्त यामि । ( प्रकाशम् ) भद्र ! का नाम रामलक्ष्मणयोरिह प्रवृत्ति ? ।

**पुरुषः**—( सखेदम् ) यया द्रोणपर्वताभिमर्चिर्हनुमन्निवेदितया वार्त्तया सकलमप्यार्त्त रघुराजकुटुम्बक जीवितसन्देहे वर्त्तते ।

भरतस्तु—

श्रुत्वा लक्ष्मणवक्षो रक्षोराजेन विक्षत शक्त्या ।
निन्दति निजहृत्पिण्ड शतखण्डमजायमानमसौ ॥ ३२ ॥

**कार्पटिकः**—( सोद्वेगमिव ) अद्यापि तथैव दुर्दैवदण्ड काकुत्स्थकुलस्योपरि भ्रम्यति ? । ततस्ततः ? ।

**पुरुषः**—अथ देव्यौ कौशल्यासुमित्रे शोकव्याकुलतायत्तचित्ते साकेतात् समागत वत्यौ धैर्यावष्टम्भविरचिताकारसवरणेन भरतेन प्रतिबोध्य पुनस्तत्रैव प्रेषिते ।

**कार्पटिकः**— केकयराजात्मजाऽपि तत्र समागता ? ।

**पुरुषः**—नहि नहि ।

**कार्पटिकः**—कुत ? ।

**पुरुषः**—न खलु रामभद्रप्रवासवासरादारभ्य भरतो निजमातुर्मुखमवलोकते ।

**कार्पटिकः**—( सचमत्कारम् ) अहो ! लोकापवादभीरुता काऽपि दिलीपान्वयस्य ।

**पुरुषः**—(पुरो विलोक्य) तदिद नन्दिग्रामोद्यानम्, यत्रासौ रत्नसिंहासनाधिरोपित रामभद्रपादुकामत कुशविष्टरोपविष्टो जटावल्कलधारी सुमन्त्रद्वितीय कुमारो मैत्रावरुणप्रहितेन जानुकर्ण्यनाम्ना मुनिशिष्येण सम सम्भाषमाणोऽस्ति । तदिह प्रविशाव । (इति तथा कुरुत ।)

(तत प्रविशति यथानिर्दिष्टो भरत सुमन्त्रो जानुकर्ण्यश्च ।)

**भरतः**—( सप्रश्रय [ मुनि ] शिष्य प्रति ) ब्रह्मर्षे ! किमादिष्टमाराध्यपादै ? ।

**जानुकर्ण्यः**—कुमार ! किमपि ध्यात्वा भगवानित्यादिदेश—यदद्य भवद्भिर्लङ्काभिमुखप्रयाणोत्सुकैरप्यस्मदागमन यावत् प्रतीक्षणीयम् ।

1 'साभिधानवर्ति' द० । 2 'समागता' भा० । 3 'रवा मत्प्रभवेत्यादिष्टम्-यदद्य' भा० । 4 'द्वागमनप्रया' द० ।

**भरतः**—शिरस्यारोपितेयं कुलगुरोराज्ञा । परं भवताऽपि तथा यतितव्यम् यथा ते तनभयन्तस्त्वरितमागत्य मामनुगृह्णन्ति ।

**मुनिशिष्यः**—ओम् ( इत्युक्त्वा निष्क्रान्तः । )

**कार्पटिकः**—( पुरुषं प्रति ) भद्र ! निष्क्रान्तस्तावदयम् । तत कालक्षेपाक्षममिहायातमावेदय मां कुमाराय । ( इत्युपसर्पत । )

**पुरुषः**—( भरतं प्रणम्य ) सोऽयमगस्तिमहर्षिप्रेषितो मुनिपुत्रकः किञ्चिदाख्यातुकाम इतो वर्तते ।

**भरतः**—( अनाकर्णितकेन सवितर्कं चिन्तितम् )

> व्यावृत्त्य रामभृत्यः स कपिर्लङ्कां गतो भवेद् भूयः ।
> तैरौषधैरशल्यः कल्यः स्याल्लक्ष्मणः किन्नु ¹ ॥ ३३ ॥

**पुरुषः**—कथं नावधारितम् ² । ( पुनस्तदेव कथयति )

**भरतः**—( श्रुत्वाऽवलोक्य च ) कथमसौ करभको मुनिपुत्रकमेतमुपेनमावेदयति ³ । ( इति सबहुमानमुपवेशयति । )

**भरतः**—तपोनिधे ! किमसुस्थितमना इव⁴ विलोकयसे ? ।

**कार्पटिकः**—( सोद्वेगमिव ) कुमार ! कुत सौस्थ्यमीदृशे दैव³दुर्विपाके ! तथापि गुरादेशा⁴यत्तनयाऽऽवेदयितुमागतोऽस्मि । श्रूयताम् —

> सीताकृते राघवलक्ष्मणाभ्यां, कृत्वा रणं कोणपचक्रवर्ती ।
> विमानमारुह्य च पुष्पकाख्यं, पुरीमयोध्यामयमभ्युपैति ॥ ३४ ॥

तदिह भवद्भिरवहितैर्भवितव्यम् ।

( सर्वे श्रुत्वा व्याकुलता नाटयन्ति । )

**भरतः**—( सुमन्त्रं प्रति ) कथमप्रतिविधायैव तौ राजपुत्रावागमिष्यति राक्षसाधिपति ? ।

**कार्पटिकः**—( सबाष्पम् ) प्रतिविहितं दुष्टदैवेन ( इत्यधोमुखस्तिष्ठति । )

**सुमन्त्रः**—( साश्रम् ) हन्त ! व्यक्तमावेद्यताम् ।

---

1 ँतर्के चिन्तितम् दे० । 2 इत्यावलोक्य ? भा० । 3 दुर्दैवविपाके भा० । 4 ँशात् तदावे भा० ।

**कार्पटिकः**—तथैवाऽऽस्ते ।

**भरतः**—( बलाद् बाष्पं निगृह्य सुमन्त्रं प्रति ) आर्य ! न ह्यनिष्टमेवंविधा स्पष्टमावेदयन्ति, शेष स्वयमभ्यूहनीयम् ।

**सुमन्त्रः**—( सनिर्वेदमाकाशे ) हा कुमारौ रामलक्ष्मणौ ! हा वत्से वैदेहि ! कीदृगवस्था वर्त्तते सम्प्रति युष्माकम् ? । विश्राण[1]यन्तु पुनरात्मदर्शनं कण्ठगतजीवितस्य जीवलोकस्य ।

**भरतः**—( सावष्टम्भम् ) आर्य ! न खलु विल्पत्सु विधिरनुक्रोशति, तदलमिदानीं विषादेन। ( पुनः करभकं प्रति ) रे त्वमपि मा रोदीः, न हि बाष्पनिपातेन शत्रवः साध्यन्ते। तदानीयतां शरासनम् । गत्वा च निवेद्यतामाहूतायालपार्थिवपरिवृताय शत्रुघ्नाय, यदिहायाति नितम्बशी निशाचरपतिः तद् भवद्भिरुत्थायुधैः सन्नद्धसैन्यैः स्थातव्यम् ।

**पुरुषः**—यदादिशति देव । ( इत्यभिधाय निष्क्रान्तः । )

**सुमन्त्रः**—हा कुमारौ रामलक्ष्मणौ ! ( इत्यादि पुनः शोचति । )

**कार्पटिकः**—( सुमन्त्रं प्रति ) आर्य ! कृतं शोका[2]वेगेन । यतः —

यस्मा[3]द्दक् कृतवान् निनाय नतवान् शोच्यः स किं लक्ष्मण
स्तद्वृत्तेरुचितं विधाय च निजं रामोऽत्यजद् वाच्यताम् ।

वैदेही तदनु प्रविश्य दहने मुख्या सतीनामभूत्,

**भरतः**—( स्व प्रति )

गर्ह्यास्त्विति नापरः सति महापापैकपात्रे मयि ॥ ३५ ॥

( पुनः सुमन्त्रं प्रति सावष्टम्भम् ) आर्य ! किमतः परं निरुद्धो विधिरस्माकं करिष्यति ? ।
यतः —

दैवेन दर्शिता याऽद्य रामलक्ष्मणयोर्गतिः ।
सहान्तःपुरपौराणां सवास्माकं भविष्यति ॥ ३६ ॥

( प्रविश्य )

**पुरुषः**—तदेतद् धनुः । ( इति समर्प्य ) कुमार ! सज्जीकृतसकलसैनिकः कुमार

---

1 °एवद सु° भा० । 2 कथन पुरु° भा० । 3 °शावेशेन द० । 4 °स्वायत कृ° द० ।

शत्रुघ्न श्रुताऽपत्यवार्ते देव्यौ कौशल्यासुमित्रे कृतकृशानुप्रवेशनिश्चये प्रतिबोधयितुं सरयू-गरित प्रतिष्ठमानोऽस्मि ।

**भरतः**—( सवैलक्ष्य श्रुत्वा सुमन्त्र प्रति ) आर्य ! सकलमपि तावद् दिलीपकुल मेकेनैव पथा गमयितुमारब्धमधुना दुर्दैवेन । ( पुन सावष्टम्भम् ) भवतु । को विरोध ? ।
( इति चापमारोपयति । )

**कार्पटिकः**—( सहर्षमात्मगतम् ) साधित मयात्मसमीहितम् । रामसमागमनसमयश्च प्रत्यासन्न तद् गच्छामीति । ( प्रकाशम् ) कुमार ! नात परमहमालोकितुमुत्सहे ।
( इत्युक्त्वा निष्क्रान्त । )

( तत प्रविशन्ति विमानस्थिता रामभद्रादय । )

**रामः**—( दूरादवलोक्य सहर्षम् ) वत्स लक्ष्मण ! सेय भगवती महाराजान्वय राजधानी सरयूसलिलपवित्रीकृतपरिसरा पुर प्रेक्ष्यते । तत् प्रणम्यतामियम् ।

( सर्वे प्रणमन्ति )

**लक्ष्मणः**—आर्य ! चिरकालविलोकिताऽप्यसौ नगरी तातमन्तरेण न तथा प्रमोद-मुत्पादयति ।

**रामः**—( स्मृत्वा सगद्गदम् ) वत्स ! नमस्तस्मै निजसमागमन्यसने सुतामभिनाय महा-राजाय । तथाहि—

> भग्न धनुस्त्रिनयनस्य यथाऽर्हवणा
> 
> दाकर्ण्य तत् प्रमदगद्गदया गिरा य ।
> 
> अन्त पुर स्वयमुपेत्य मदीयमातु
> 
> र्देव्या पुर ससभ्रम कथयाचकार ॥ २७ ॥

**सुग्रीवः**—( समन्तादवलोक्य साश्चर्यम् ) कथमसौ सर्वा परित सान्द्रानि सैन्यानीव विलोक्यन्ते ? । तथाहि—

> सान्द्राना निबिडैर्गजैश्च करिणा चूर्णै रथाना तथा,
> 
> पत्तीनामपि पद्धतिभिस्तनमिद नोर्वीतल लक्ष्यते ।

---

1 सम्पिनै तु सर्वा' दे० । 2 'सरया गाम' द० 3 सभी महाराजा' म० । 4 'नाडीर व भ० ।

कल्पान्तोद्धतमेघगर्जितमहाऽम्भारनिम्मारिणि ,
दिक्चैते रचयन्ति निर्म्मयरव भेरीरवा भेग्रा ॥ ३८ ॥

तत् किमेतत् ? इति ।

( सर्वे साश्चर्यमालोकयन्ति । )

**विभीषणः**—( स्मृत्वा सचमत्कार राम प्रति ) यथा स कार्पटिकनामा लवणप्रणि-धिरयोध्याभिमुख गन्तव्यमलोकि, तथा तनाथेन नियतमिमा पुरीमुपरुद्धामह सम्भावयामि ।

**रामः**—( विमृश्य ) । तदेतदुपपद्यत एव, परं व मत्सनुत्वे पुरीपालननिश्चे कुतो लवणविक्रमस्यावकाश ? ।

**सौमित्रिः**—वत्सौ (पुन सरयूतटमवलोक्य साशङ्कम्) कथमेते मातरो यदि प्रवेशाभिमुखे इतो विलोक्येते ? । तत्र कुशल च मयोर्भरतशत्रु योरिति ।

( सर्वेऽपि विशेषत्याकुलता नाटयन्ति । )

**सीता**—( दृष्ट्वा सभयम् ) भयवदीओ रहुकुलदेवदाओ ! तुम्हाण पसाएण दहरहसुआण दुरिदमदरीयदु ।

( राम सीदति । )

**सर्वे**—सम्यगिदमवगमिष्याम । ( इति विमानाग्रत परिक्रामन्ति । )

**विभीषणः**—( राम प्रति ) देव ! सोऽयमस्माक चिरपरिचित सपरिवारो मथुराधिपति, तदेनमुपलक्षयामि । ( इति गदामादायोत्थित सर्वत पश्यति । )

**भरतः**—( ऊर्ध्वमवलोक्य ससम्भ्रमम् ) आर्य सुमन्त्र ! तदिदं विमानम् । अय च राक्षसाधिपतिरिहाऽऽगच्छति । तदिदानीमवलोक्यतामस्मदीयमाचरितम् । ( इति धनुषि शर धत्ते । )

**विभीषणः**—( दृष्ट्वा ) कोऽसौ जटावल्कलधारी तपोधनो धनुपाणि सक्रोध इव मुहुर्मुहुरस्मानवलोकयति ? । भवतु । इत एनमवगच्छामि । ( इति विमानेनोपसर्पति । )

**सुमन्त्रः**—कुमार ! नियत भगवता मैत्रावरुणेन राक्षसपतेरागमनमवगच्छता लङ्कागमनार्थं मन्थरीकृतो भवान् ।

१ भगवत्यो रघुकुलदेवता ! युष्माकं प्रसादेन दशरथसुतानां दुरितमन्तरायताम् ।

1 °यमर भ° भा० । 2 °थयमवलो° भा० । 3 ( विमृशति ) दे० । 4 °व रोऽपि मथुराधिपति , तावत् तमुप दे० । 5 एव ग° भा० ।

**भरतः**—किमपरिज्ञातमात्मदशाम् ? ।

**विभीषणः**—(समीपमुपसृत्य भरतं प्रति) भोस्तपोधन ! किमर्थोऽयं व्रतचर्याविरुद्धो धनुःपरिग्रहः ? ।

**भरतः**—(सावेशम्) राक्षस ! क्षणमत्रैव तिष्ठ । सुष्ठु यथा तत् कथयाम्येष निःशेषं धनुर्धारणकारणमिति ।

**विभीषणः**—(दृष्ट्वा साश्चर्यम्) कथमयमस्मरणे मां प्रतिहीर्षति ? । (इति गदां दर्शयन्)

तपस्विनि कथं पूर्वमस्त्रं मुञ्चामि तु त्वयि ? ।
युद्धे यद् दुःसहत्वस्य साक्षिणो रामलक्ष्मणो ॥ ३९ ॥

**भरतः**—(पुनः सावेशम्) आः ! किं ब्रूषे ? "युद्धे यद् दुःसहत्वस्य साक्षिणौ रामलक्ष्मणौ" तदिदानीमनुभवत्वस्य कर्मणः फलम् । (इति बाणं मोक्तुमिच्छति ।)

(प्रविश्य)

**वशिष्ठः**- (भरतं प्रति) वत्स ! कृतं कृतमनुना निर्बन्धेन । मुच्यतां चापम् । आदीयतामर्घपात्रम् । दिष्ट्या स एष विमानाधिरूढो रामभद्रः कुशली सीतालक्ष्मणाभ्यां सह सम्प्राप्तः । अयं च राक्षसाधिपतिर्विभीषणः । कपीश्वरः सुग्रीवश्चायम् (इति दर्शयति ।)

**भरतः**—(वशिष्ठं प्रणम्य सानन्दम्) भगवन् ! भवदाननेन्दुविनिर्गतेन रघुकुलकुशलप्रवृत्तिपीयूषप्रवाहेन पुनरुज्जीविताः स्मः । (नेपथ्याभिमुखमवलोक्य) कस्कोऽत्र भोः ?, समानीयतामर्घपात्रम् ।

(प्रविश्य)

**पुरुषः**—देव ! तदेतत् । (इत्यर्घपात्रं उपनीय धनुरादाय निष्क्रान्तः ।)

**सुमन्त्रः**—(सहर्षम्) करभक ! सत्वरमिहाऽऽकारय देव्यौ शत्रुघ्नं च ।

**करभकः**—यदादिशति आर्यः । (इत्युक्त्वा द्रुतं निष्क्रान्तः)

**विभीषणः**—(सविस्मयं वीक्ष्य रामं प्रति) देव ! परिभाव्यतामितः । कोऽप्यसौ तापसश्चापरोपौ परित्यज्य सप्रमोदमर्घपात्रं पुरस्कुर्वन्नस्माकमभिमुखमभ्येति ।

**लक्ष्मणः**—(उत्थायावलोक्य च सहर्षं रामं प्रति) देव ! देव ! दिष्ट्या वर्धसे ।

---

1 (मामयम्) भा० । 2 °दुरात्मवि° दे० । 3 °हति दव दे० ।

सोऽयमार्यो भरत सार्धपाणिर्भगवन्त वशिष्ठ'मग्रेकृत्य भवन्तमभ्युत्तिष्ठति ।

**रामः**—( श्रुत्वा सानन्दविस्मयम् ) वत्स लक्ष्मण !

इत कृतचिते देव्यानिन सर्गमिता चमू ।
इतश्च भरत प्रीत्या समभ्येतीति को विधि ? ॥ ४० ॥

भवतु, सर्वमिदानी व्यक्तीभविष्यति । ( इति सर्वे विमानावतरण नाटयन्ति । )

**भरतः**—( सम्भस राममुपेत्य ) देव ! सोऽयमगृहीतदुःखसविभागो भरत प्रणमति ।

**रामः**—( सरभस भरतमुत्थाप्याऽऽलिङ्ग्य च वशिष्ठ प्रति ) भगवन् ! अयमचरमो दाशरथि प्रणमति ।

**वशिष्ठः**—वत्स ! कल्याणभाजन भव । ( सीता दूरस्था[2] प्रणमन्ता प्रति ) वत्से ! चिरकालमविधवा[3] वीरप्रसविनी च भूया । ( लक्ष्मणविभीषणसुग्रीवाश्च प्रणमत प्रति ) वत्सा ! विजयध्वमिति ।

( सर्वे यथोचित समुदाचरन्तो हर्षाश्रुवर्षामभिनयन्ति । )

**रामः**—( सुमन्त्र प्रति ) आर्य ! कथय, कथमेष सैन्यविन्यास ? कथ देव्योरय परुपक्रम ? ।

**सुमन्त्रः**—देव ! [4]सम्पातिप्रतिपादितसीतापहारप्रवृत्तिना कुमारभरतेन निवेदित भवदत्याहितमाकर्ण्य देव्योरयमनुचितारम्भ ।

**विभीषणः**—( विमृश्य ) निश्चित तस्यैव कार्पटिकस्य दुर्नाटकमेतत् ।

( प्रविश्य )

**करभकः**—( राम प्रणम्य ) स्वामिन् ! इमे देव्यौ कौशल्यासुमित्रे कुमारशत्रुघ्नेन विनिर्दिश्यमानमार्गे सानन्दौत्सुक्यमित समागच्छत ।

**रामः**—( ससम्भ्रमम् ) कथ देव्यौ स्वयमिहाऽऽगच्छत ? । तदुपसर्पामि । ( इति तथा करोति । )

( तत प्रविशन्ति प्रमोदातिशयमभिनयन्त्यौ कौशल्यासुमित्रे शत्रुघ्नश्च । )

---

1 °ष्ठ पुरस्कृत्य भा० । 2 दूरस्थिता प्र° भा० । 3 °वा पुत्रप्र° भा० । 4 सम्प्रति प्रात° दे० ।

**कौशल्या**—( रामलक्ष्मणौ निरीक्ष्य सुमित्रां प्रति ) सहि सुमित्ते[1] चिरयाल्दो वि एयाण पुत्तयाणं मुहयदमाणदबाप्पप्पवाहपिहिदलोयणाण खु फुड पिक्खामि ।

**सुमित्रा**—देवि[2] अह पि त्ति ।

( उभे परिक्रामत । )

**रामः**—( सरभसमुपेत्य ) अम्ब[1] प्रणमामि । ( इति कौशल्यां प्रणम्य सुमित्रां प्रणमति । )

( लक्ष्मणोऽपि तथाकरोति । )

**देव्यौ**—( पुत्रावालिङ्ग्य शिरस्याघ्राय च ) पुत्तय[3] तुम्हाण सव्वाण वि सुह सजोयरमणिज्ज चिरयाल जीविद भोदु ।

( सीताऽपि समेत्य नामग्रहणार्थं बाष्पमुत्सृजन्ती देव्यौ प्रणमति । )

**देव्यौ**—( सीतामालिङ्ग्य ) वच्छे[4] वीरजणणी होधि ।

**सुग्रीवविभीषणौ**—( दृष्ट्वा ) नियतमेते रामलक्ष्मणजनन्यौ । (उपेत्य प्रणमत ।)

( देव्यौ सविस्मयमालोकेते । )

**रामः**—( सुग्रीव दर्शयन् )

[ ,

।

( विभीषण दर्शयन् ) ]

नक्तञ्चराधिपतिरेष बभूव भूयो,

मन्दोदरीदयितविक्रमबद्धसेतु ॥ ४१ ॥

**देव्यौ**—( सहर्षम् ) परमेसरस्स सहस्सरस्सिणो पसाएण अम्हेहिं दुवेहिं अहिणव पुत्तजुअल समासादिद । ता एद पि सुहसपत्तिजुत्त चिरयाल नददु ।

---

१ सखि सुमित्रे ! चिरकालादपि एतयो पुत्रयो मुखचन्द्रमान दबाष्पप्रवाहपिहित लोचनयो खलु स्फुट पश्यामि ।

२ देवि ! अहमपि इति ।

३ पुत्रक ! युष्माक सर्वेषामपि सुखसयोगरमणीय चिरकाल जीवित भवतु ।

४ वत्से ! वीरजननी भव ।

५ परमेश्वरस्य सहस्ररश्मे प्रसादेन आवाभ्या द्वाभ्या अभिनव पुत्रयुगुल समासादितम् । तदेतदपि सुखसम्पत्तियुक्त चिरकाल नन्दतु ।

( भरतशत्रुघ्नावपि तयो. प्रणामं कुरुत । )

**वशिष्ठः**—( रामं प्रति ) वत्स ! राज्याभिषेकाय मङ्गलमुहूर्त्तो वर्त्तते। तदेतदलङ्क्रियता भद्रासनम् ।

**रामः**—आदेश प्रमाणमिति ।

**वशिष्ठः**—( नेपथ्याभिमुखमवलोक्य ) कम्कोऽत्र भो !? । समानीयतामभिषेकसम्भारः ।

( प्रविश्य मङ्गलकलशहस्तः )

**जानूकर्ण्यः**—भगवन् ! अयमुपादीयताम् ।

( वशिष्ठ. कलशमादाय रामस्याभिषेकं करोति । )

( आकाशे देवदुन्दुभिध्वनिः पुष्पवृष्टिश्च । )

**सुमन्त्रः**—( सानन्दमूर्ध्वमवलोक्य ) कथमसौ वैमानिकलोको रामराज्याभिषेकमहोत्सवानन्दमाविष्करोति ! ।

**रामः**—( भरतं प्रति सोपरोधम् ) वत्स ! चिरकालादनुशयकृशानुसन्तप्ता मध्यमाम्बामात्मीयमुखेन्दुदर्शनेन निर्वापयितुमर्हसि । ( इति वशिष्ठमुखमुदीक्षते । )

( भरत सलज्जमधोमुखस्तिष्ठति । )

**वशिष्ठः**—वत्स ! नातिक्रमणीयोऽयं राजादेश. ।

( राम भरतं करे गृहीत्वोत्थातुमिच्छति । )

[[1] . . ... ... ... ]

**वशिष्ठः**—( राम प्रति ) वत्स ! कथय किं ते भूय प्रियमनुकरोमि ? ।

**रामः**—( सप्रश्रयमञ्जलिं बद्ध्वा ) भगवन् भास्करान्वयसौवस्तिक !

तीर्णे क्लेशार्णवे सोऽयं नावेव भवदाशिषा ।
स्वजनैः सङ्गतिश्चाभूदस्तु मे किमतः परम् ? ॥ ४२ ॥

**[ वशिष्ठः ]** तथाऽपीदमस्तु—

राजानो जनयन्तु कीर्त्तिकुमुदैरामोदिनीं मेदिनीं,
भूदेवाश्च तदापदामपनुदे वह्नौ वषट् कुर्वताम् ।

---

1 अत्रान्तरे क्वचित् सन्दर्भस्त्रुटित सम्भाव्यते ।

वक्राम्भोरुहरङ्गभूमिविहरद्धाग्देवतामत्सरं,
श्रीरुत्सृज्य करोतु तेषु च रतिं मत्तेभविभ्राजिनी ॥ ४३ ॥

( इति निष्क्रान्ताः सर्वे । )

## ॥ अष्टमोऽङ्कः समाप्तः ॥ छ ॥

॥ समाप्तमिदं उल्लाघराघवं नाम नाटकम् ॥ कृतिः श्रीसोमेश्वरदेवस्य ॥

☞ [1]अम्भोजसम्भवसुता वक्राम्भोजेऽस्ति वस्तुपालस्य ।
यद्वीणारणितानि श्रूयन्ते सूक्तिदम्भेन ॥ १ ॥

[ प्रशस्ति ]

आसीद् भूमी ..र्जरो गूर्जराणा, पूजापात्रं श्रीकुमारः पुरोधाः ।
यः प्राकारः पुण्यसंरक्षणार्थं, विप्राकारः कल्पितो वेधसाऽत्र ॥ १ ॥

य कर्माणि च षड् गुणाश्च तनुते तद्भूर्भुवःस्वस्त्रयं,
कीर्तिर्यस्य वराप्यनिर्मलरुचिर्नो जातुचिन्मुञ्चति ।
शस्त्राविष्कृतिरध्वरे च युधि च श्लाघ्योज्झिहीते यत,
सूत्रं यस्य हृदि स्फुरत्यविरतं ब्राह्मं च राज्यस्य च ॥ २ ॥

अरुन्धतीव कान्ताऽस्य पत्युरुज्जामरुन्धती ।
अभूत्रमि(?भी) यया लक्ष्मी साक्षाल्लक्ष्मीरिव क्षितौ ॥ ३ ॥

तदङ्गजः स्फाङ्गजलक्ष्मशर्मप्रयुक्तया प्रार्थनया प्रयुक्तः ।
चकार सोमेश्वरदेवनामा, स(?रा)मायणं नाटकरूपमेतत् ॥ ४ ॥

प्रायो वय वेदविचारपारगस्येन नाथेन तथाभियुक्ताः ।
दुर्गेऽत्र मार्गे तदपि प्रवृत्ता, नोपेक्षणीया कविभिःऽलस्त ॥ ५ ॥ ←

[1] इत्यारभ्य पद्यमिदं प्रशस्तिश्च प्रतौ न स्तः ... नास्ति ।

# पद्यानां सूची